

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

नवम्बर् २०२० रू. ५/-

तिरुचानूरु-

## श्रीपद्मावतीमातुः कार्तिकब्रह्मोत्सवः

२०२० नवम्बर् ११ तः १९ पर्यन्तम्

तिरुचानूरु-
श्रीपद्मावतीमातुः
कार्तिकब्रह्मोत्सवस्य
विशेषसञ्चिका




१६-१०-२०२०
तः
२४-१०-२०२०
पर्यन्तम् प्रवृत्तस्य
श्रीवेङ्कटेश्वरस्वामि -
नवरात्रिब्रह्मोत्सवस्य
दृश्यमालिका

















## गीतामृतम्

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ।।

(भगवद्गीता १६/१)

युधिष्ठिरः अनन्तविजयनामकं शङ्खम् अधमत्। नकुलः सुघोषनामकं सहदेवश्च मणिपुष्पकनामकम् शङ्खम् अधमत्।

## सङ्कीर्तनम्

मानातीतप्रथितविभवां मङ्गलं मङ्गलानां
वक्षःपीठीं मधुविजयिनो भूषयन्तीं स्वकान्त्या।
प्रत्यक्षानुश्रविकमहिमप्रार्थिनीनां प्रजानां
श्रेयोमूर्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये।।१।।

आविर्भावः कलशजलधावध्वरे वाऽपि यस्याः
स्थानं यस्याः सरसिजवनं विष्णुवक्षःस्थलं वा।
भूमा यस्या भुवनमखिलं देवि दिव्यं पदं वा
स्तोकप्रज्ञैरनवधिगुणा स्तूयसे सा कथं त्वम्।।२।।

स्तोतव्यत्वं दिशति भवती देहिभिः स्तूयमाना
तामेव त्वामनितरगतिः स्तोतुमाशंसमानः।
सिद्धारम्भः सकलभुवनश्लाघनीयो भवेयं
सेवापेक्षा तव चरणयोः श्रेयसे कस्य न स्यात्।।३।।



श्रीवेङ्कटनाथसूरिणः वेदान्तदेशिकाः इत्येव प्रसिद्धाः। एते श्रीवैष्णवसम्प्रदायस्य सुप्रसिद्धाः आचार्याः। यद्यपि एते श्रीभगवद्रामानुजमतानुगाः, तथापि एतेषां पाण्डित्यं कवित्वशक्तिं सर्वे समादरन्ति। संस्कृतवाङ्मये देशिकाः सर्वकालमान्याः कवयः। तेषां कृतिषु श्रीस्तुतिनामकं स्तोत्रं नितरां प्रसिद्धम्। महालक्ष्म्याः स्तुतिः अत्र रमणीयतया कृता। श्रीस्तुतेः आदिमाः त्रयः श्लोकाः उपरि दत्ताः।

# वन्दे जगन्मातरम्



श्रीमत्सौभाग्यजननीं
स्तौमि लक्ष्मीं सनातनीम्।
सर्वकामफलावाप्ति-
साधनैकसुखावहाम्।।

''तिरुचान'' इति पदस्य श्रीकान्ता इत्यर्थः। सैव महालक्ष्मीः। इयं देवी सदा श्रीहरेः वक्षःस्थलवासिनी शोभते। सैव अधुना तिरुचानूरुक्षेत्रे अलमेलुमंगा इति नाम्ना आराध्यते। पद्मसरसि पद्मात् उद्भूता इति हेतोः पद्मावती इत्यपि सा प्रसिद्धिं प्राप।

कृतयुगे इयं भृगुमहर्षेः पुत्री बभूव। अत एव भार्गवी इत्यभिधीयते। तदनन्तरं क्षीरसागरमथनसमये तस्य सागरस्य पुत्रिकारूपेण जन्म लेभे। तदारभ्य सागरकन्यका इत्यपि व्यवह्रियते।

कदाचित् त्रिमूर्तिषु सत्त्वगुणसम्पन्नः कः इति प्रश्नः ऋषिमण्डले उदभूत्। भृगुमहर्षिः सत्त्वगुणसम्पन्नं ज्ञातुं सत्यलोकं, कैलासं च गत्वा विफलप्रयत्नो बभूव। तदनु वैकुण्ठं गत्वा लक्ष्मीसमुपेतस्य महाविष्णोः वक्षःस्थलं स्वपादेन प्राहरत्। श्रीहरिः प्रशान्तचित्तः कोपरहितः महर्षेः पादसंवाहनं कृत्वा स्वस्य सत्त्वगुणसम्पन्नत्वं प्रकटयामास। भृगुः ऋषिमण्डलसमीपं गत्वा महाविष्णुरेव सत्त्वगुणसम्पन्नः यज्ञैः आराधनीयश्च इति प्रकटीचकार।

भृगोः पादप्रहारं असहमाना लक्ष्मीः वैकुण्ठं परित्यज्य, भूलोकं गत्वा कोल्हापुरम् अध्यतिष्ठत्। महाविष्णुः भूलोकं जगाम। तत्र आकाशवाणी ''हे विष्णो! त्वं स्वर्णमुखीतीरं गत्वा तत्र कुन्तेन सरोवरं कुरु। तत्र सुवर्णकमलानि स्थापय। सरस्तीरे द्वादशाब्दपर्यन्तं तपश्चर। ततः महालक्ष्मीः प्रसन्ना भविष्यति'' इत्युवाच। गगनवाणीवचनं अङ्गीकृत्य श्रीमन्नारायणः तदुक्तरीत्या सर्वं चकार। द्वादशवर्षसमनन्तरं-

ततस्त्रयोदशे वर्षे कार्तिके शुक्लपक्षके।
पञ्चम्यां शुक्रवारे च मुहूर्ते मन्त्रसंज्ञके।।

इत्युक्तरीत्या महालक्ष्मीः पद्मसरसः कार्तिकशुक्लपञ्चम्यां स्वर्णपद्मात् आविर्बभूव। सा लक्ष्मीः व्यूहलक्ष्मीः इत्युच्यते। सा हरिं समुपेत्य कल्हारमालां तस्य कण्ठे समर्प्य तद्वक्षसि प्रतिष्ठिता बभूव। सर्वेऽपि लोकाः तद्विलोक्य सन्तुष्टा बभूवुः।

कपिलमहर्षिप्रेरणया लक्ष्मीः द्वितीयपद्मावतीरूपेण पद्मसरसः उदभूत्। सा वीरलक्ष्मीः इत्युच्यते। सा लक्ष्मीरेव तिरुचानूरुक्षेत्रे आलये प्रतिष्ठिता सती भक्तजनैः आराध्यते। ये च भक्ताः वेङ्कटेश्वरदर्शनार्थं तिरुमलक्षेत्रं तिरुचानूरुमार्गेण गच्छन्ति तेभ्यः प्रथमदर्शनं अनुगृह्य तान् प्रति सप्तगीरीश्वराय निवेदयति। एवं पुरुषकारस्वरूपिणी लक्ष्मीः भक्तजनान् अनुगृह्णाति।

तिरुमलक्षेत्रे इव तिरुचानूरुक्षेत्रेऽपि नित्योत्सव-वारोत्सव-नक्षत्रोत्सव-संवत्सरोत्सवाः पाञ्चरात्रागम-निर्देशानुसारेण प्रवर्तन्ते। भाद्रपदपूर्णिमासन्दर्भे प्रतिसंवत्सरं दिनत्रयपर्यन्तं पवित्रोत्सवाः प्रचलन्ति। तदनु कार्तिकशुक्लपञ्चमीं देव्याः जन्मतिथिं पुरस्कृत्य कार्तिकब्रह्मोत्सवाः महता वैभवेन आचर्यन्ते। अयं कार्यक्रमः दशदिनेषु प्रवृत्तः कार्तिकशुद्धपञ्चम्यां समाप्तो भवति। तदा प्रतिदिनं प्रातःकाले सायंकाले च आगमोक्तप्रकारेण वाहनसेवाः प्रवृत्ता भवन्ति। सहस्रशः जनाः विविधप्रान्तेभ्यः समागत्य देवीदर्शनेन उत्सवसंदर्शनेन च धन्यत्वं प्राप्नुवन्ति। विशिष्य पञ्चमीतीर्थोत्सवे लक्षशः जनाः आगत्य आनन्दमनुभवन्ति। तेष्वनेके भक्ताः चक्रस्नान समये सरसि स्नात्वा देव्याः अनुग्रहं लभन्ते।

उत्सवशब्दस्य ''उदित्युत्कृष्टवचनः सवो यज्ञ उदाहृतः'' इतिनिर्वचनानुसारेण ''उत्कृष्टयज्ञः'' इति अर्थं वदन्ति। अपि च ''उत्सूते हर्षं इत्येष उत्सवः परिकीर्तितः'' इत्युक्तरीत्या एते उत्सवाः भक्तलोकाय हर्षोत्कर्षं वितीर्य समाप्तिं गच्छन्ति।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः



**सूचना**
मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।
— *प्रधानसम्पादकः*


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-०८

## नवम्बर् - २०२०

श्रीशार्वरिनाम संवत्सरस्य निज आश्वयुज बहुल पाड्यमि तः
कार्तिक पूर्णिमापर्यन्तम् - १९४१




मुखचित्रम् - तिरुचानूरु श्रीपद्मावती मातुः
अन्तिमरक्षापुटः - तिरुचानूरु श्रीपद्मावती मातुः पुष्पयागमहोत्सवः


**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-





# वेङ्कटेश्वरः

- डा. महामहोपाध्यायः समुद्राल लक्ष्मणय्य
चरवाणी - ७९९३६६९२१६

ऋग्वेदकालेऽपि वेङ्कटगिरेः महिमा प्रथित आसीदिति वदन्तः ऋग्वेदे कंचन मन्त्रं तत्र प्रमाणत्वेन दर्शयन्ति।

अरायि काणे विकटे गिरिं गच्छ सदान्वे।
शिरिम्बिठस्य सत्त्वभिस्तेभिष्ट्वा चातयामसि।
(ऋक्संहिता - १०-१५५-१)

अस्य विवरणं तैरेवं क्रियते - अरायि = हे निर्धन, (परलोक-ज्ञानहीन!) काणे = अन्ध! (परमार्थज्ञानरहित!) विकटे = क्लिष्टायां स्थितौ, सदान्वे = दानवानामाक्रमणकाले (लौकिकविषयाणामौद्धत्ये सति), शिरिम्बिठस्य = श्रीनिवासस्य, गिरिं = पर्वतं, गच्छ = याहि इति।

निर्धनाः कष्टां दशामापन्नाश्च भक्ताः अधुनाऽपि श्रीवेङ्कटेश्वरस्वामिनं आपन्निवारणार्थमुपगच्छन्तीति विदितमेवैतत्।

भविष्योत्तरपुराणे अस्य वेदमन्त्रस्य वेङ्कटाद्रिश्रुतिपरत्वं प्रख्यापितमस्ति। तद्यथा -

एवं श्रीकृष्णरूपेण क्रीडितो वेङ्कटाचले।
अरायि काणे विकटे गिरिं गच्छेति तं विदुः।
एवं वेदमयः साक्षाद्गिरीन्द्रः पन्नगाचलः।
छन्नवर्मीकदेहाढ्यो वैकुण्ठादधिको ह्यभूत्।।
(४-१२.२२)

न केवलं पुराणवाङ्मये, अपि तु लौकिकवाङ्मयेऽपि प्राचीने तमिलसाहित्ये आन्ध्रसाहित्ये च बहुत्र वेङ्कटाचलस्य श्रीनिवासस्य च महिमाऽभिवर्णितः। विशिष्य आल्वार् इति प्रसिद्धैः वैष्णवाचार्यैः निर्मितेषु दिव्यप्रबन्धेषु तत्र तत्र श्रीवेङ्कटेश्वरस्य प्रभावः सुष्ठु निर्दिष्टः। वराहपुराणे वेङ्कटशब्दस्य निर्वचनमेवं श्रूयते।

वेङ्कारोऽमृतबीजं तु कटमैश्वर्यमुच्यते।
अमृतैश्वर्यसङ्घत्वाद्वेङ्कटाद्रिरिति स्मृतः।।
(३७-३१)

एवं भविष्योत्तरपुराणेऽपि -

सर्वपापानि वें प्राहुःकटस्तद्दाह उच्यते।
तस्माद्वेङ्कटशैलोऽयं लोके विख्यातकीर्तिमान्।
(२२०, २२१)

इति वेङ्कटशब्दस्य प्रकारान्तरेण निर्वचनं दृश्यते।।

अपि च पुराणेषु वेङ्कटाचलस्य, वेङ्कटेश्वरस्य च भूमौ स्थितेः कारणत्वेन काश्चन कथाः अभिवर्णिताः सन्ति। श्वेतवराहरूपी श्रीमहाविष्णुः हिरण्याक्षं संहृत्य भूमिं




पातालादुद्धृत्य तत्रैव कञ्चित्कालं स्थातुमिच्छुः वैकुण्ठात् क्रीडाद्रिं गरुडद्वारा भूलोकं प्रापयामास, स क्रीडाद्रिरेव वेङ्कटाद्रिरिति कथा वराहपुराणे श्रूयते -

वैकुण्ठलोकाद्गरुडेन विष्णोः क्रीडाचलो वेङ्कटनामधेयः।
आनीय च स्वर्णमुखीसमीपे संस्थापितो विष्णुनिवासहेतोः।।

इति।

भविष्योत्तरपुराणे कदाचित्केनापि कारणेन वायुशेषयोर्मध्ये कलहः सम्बभूव। परस्परबलपरीक्षार्थं तौ सन्नद्धौ बभूवतुः। मेरोः पुत्रं आनन्दाद्रिं शेषः महता बलेन जग्राह। वायुः स्वीयं बलं विनियुज्य ततस्तं गिरिं समुत्थाप्य दक्षिणभारते स्वर्णमुखीतटे पातयामासेति वर्णितम्।

श्रीवेङ्कटेश्वरस्य चरितं पुराणेषु रसवत्तरया रीत्याऽभिहिता वर्तते। भृगुणा ब्रह्मादीनां परीक्षणं, भृगुकृतावमानेन लक्ष्म्या वैकुण्ठपरित्यागः, तामन्विष्यता विष्णुना भूलोकं प्रत्यागमनं, तत्र पद्मावत्या सह तस्य परिणयः इत्येवमादयो विशेषाः विस्तरेण पुराणेषु दृश्यन्ते। श्रीवेङ्कटेश्वरालयः तोण्डमान्चक्रवर्तिना निर्मित इति, कलियुगादौ तत्र विग्रहरूपेणाभिव्यक्तः श्रीमहाविष्णुः कलियुगान्तपर्यन्तं स्थास्यतीति तत्र कथायां श्रूयते।

कृते वरदराजः स्यात्त्रेतायां रघुनन्दनः।
द्वापरे वासुदेवश्च कलौ वेङ्कटनायकः।।

इत्यादीनि वचनानि अत्र प्रमाणत्वेन स्वीक्रियन्ते।

श्रीवेङ्कटेश्वरः सकलदेवतास्वरूप इत्यपि सम्भाव्यते। पदकवितापितामह इति प्रसिद्धेन श्रीताळ्ळपाकान्नमाचार्येण द्वात्रिंशत्सहस्रसङ्ख्याकैः सङ्कीर्तनकुसुमैः श्रीनिवासः समर्चितः। स तावत् श्रीवेङ्कटेश्वरमेवं स्तौति -

एन्तमात्रमुन नेव्वरु तलचिन - अन्तमात्रमे नीवु
अन्तरान्तरमु लेंचिचूड पिण्डंते निप्पटि यन्नट्लु।।
कोलुतुरु मिमु वैष्णवुलु - कूरिमितो विष्णुडनि
पलुकुदुरु मिमु वेदान्तुलु - परब्रह्ममनुचु।
तलतरु मिमु शैवुलु - तगिन भक्तुलनु शिवुडनुचु
अलरि पोगडुदुरु कापालिकुलु - आदिभैरडनुंचु।।
सरिनेन्नदुरु आक्तेयुलु - शक्ति रूपु नीवनुचु
दरिशनमुल मिमुनानाविधुलनु - तलपुलमोलदुल भणिंतुरु
सिरुनालमिम्मुने अल्प बुद्धि - दल - विनक्तरिकिनल्पंबवुदुवु
गरिमलमिमुने धनमनि तलचिन-घनबुद्धुलकु घनुडवु।।
नीवलन गौरते लेडु मरि - नीरुकोलादि तामरवु
आवल भागीरथि दरिबावुल - आजलमे वूरिनयट्लु
श्रीवेङ्कटपतिनीवैते ममु - जेकोनिवुन्न दैवमनि
ईवल नेनीशवरणनियेदनु - इदिये परतत्त्वमु नाकु।।
(अन्न - ७ -१५१)

तथा च वैष्णवा विष्णुरिति, वेदान्तिनः परब्रह्मेति, शैवाः शिव इति, कापालिकाः आदिभैरव इति, शाक्तेयाः शक्तिरिति च श्रीवेङ्कटेश्वरं पूजयन्ति इति। **"ये यथा मां प्रपद्यन्ते"** इत्यादि भगवद्वचनम् अत्र अनुसन्धेयम्।।

अन्नमाचार्यस्य अपरमपि सङ्कीर्तनं संस्कृते विरचितमाकर्णयन्तु

**ब्रुवन्ति बौद्धा बुद्ध इति, स्तुवन्ति भक्तास्सुलभ इति।**
**गदन्ति किल साङ्ख्यास्त्वां पुरुषं पदवाक्यज्ञाः पदमिति च।**

विदन्ति त्वा वेदान्तिनस्सदा ब्रह्मलसत्पदमिति च।
जपन्ति मीमांसकास्त्वां च विपुलकर्मणो विभव इति।
लपन्ति नय सकलास्सततं कृपालुकर्ता केवलमिति च।
भणन्ति वेङ्कटपते मुनयो ह्यणिमादिप्रदमतुलमिति
गुणवन्तं निर्गुणं पुनरिति गृणन्ति सर्वे केवलमिति च।
(अन्न - ५-१०६)

अतः श्रीवेङ्कटेश्वरः सर्वजनसम्मानितः इति ज्ञायते।



# कार्तिकब्रह्मोत्सवाः

डा.एन्.उमादेवी, चरवाणी - ९९५१७३४४९४



**ईशानां जगतोऽस्य वेङ्कटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षःस्थलनित्यवासरसिकां तत्क्षांन्तिसंवर्धिनीम्
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्वलां भगवतीं वन्दे जगन्मातरम्।।**

तिरुमलक्षेत्रे यथा बहवः उत्सवाः क्रियन्ते, तथा तिरुचानूरुक्षेत्रेऽपि नानाविधाः उत्सवाः प्रवर्तन्ते। कार्तिकमासे प्रतिसंवत्सरं प्रवर्तमानाः उत्सवाः कार्तिकब्रह्मोत्सवाः इति अभिधीयन्ते। मासेषु कार्तिकस्य महत्वैशिष्ट्यम् अस्ति। अत एव ''न कार्तिकसमो मासः न दैवं विष्णुना समम्'' इति प्रशस्तिः सञ्जाता।

अस्मिन् एव मासे श्रीवेङ्कटाचलस्य समीपे विराजमाने पद्मसरोवरतीर्थे श्रीलक्ष्मीदेव्याः अवतारस्वरूपिणी पद्मावती प्रादुर्बभूव।

ततस्त्रयोदशे वर्षे कार्तिके शुक्लपक्षके।
पञ्चम्यां शुक्रवारे च मुहूर्ते मन्त्रसंज्ञिते।।

इति पद्मपुराणोक्तिमनुसृत्य कार्तिकशुक्लपञ्चम्यां स्वर्णपद्मसरोवरे पद्मावतीदेवी अवततार। व्यूहलक्ष्मीरूपेण, वीरलक्ष्मीरूपेण च मूर्तिद्वयं स्वीकृत्य सा अवतीर्णेति कानिचित् पुराणानि कथयन्ति। व्यूहलक्ष्मीः महाविष्णोः वक्षःस्थले प्रतिष्ठिता आसीत्। वीरलक्ष्मीस्तु तिरुचानूरुक्षेत्रे एव स्थिता सती भक्तान् अनुगृह्णाति।

श्रीपद्मावत्याः जन्मदिनं पुरस्कृत्य कार्तिकमासे क्रियमाणाः उत्सवाः कार्तिकब्रह्मोत्सवाः इति कथ्यन्ते। तत्र अन्तिमदिने सहस्रशः भक्ताः नानादिग्देशेभ्यः समागताः पवित्रे पद्मसरसि स्नानं कुर्वन्ति। एतेषु उत्सवेषु पाञ्चरात्रागमोदितकैङ्कर्याणि विधिवत् विधीयन्ते। प्रथमतः विष्वक्सेनाराधनं अन्ते चक्रस्नानं च प्रवृत्ते भवतः।

तिरुमलब्रह्मोत्सवेष्विव अत्रापि वाहनसेवा निर्वर्त्यते। चिन्नशेषवाहनं, हंसवाहनम्, मौक्तिकमण्डपवाहनम्, सिंहवाहनं, कल्पवृक्षवाहनं, सर्वभूपालवाहनं, गरुडवाहनं, गजवाहनं, सूर्यप्रभावाहनं, चन्द्रप्रभावाहनं, रथोत्सवः, अश्ववाहनं इत्येवं बहुविधवाहनसेवा उत्सवेषु क्रियन्ते। भक्ताश्च सहस्रशः आगत्य वाहनसेवां विलोक्य हर्षमनुभवन्ति।

उत्सवशब्दस्य ''उदित्युत्कृष्टवचनः सवो यज्ञ उदाहृतः ''इत्युक्तरीत्या उत्कृष्टयज्ञः इति अर्थः सिद्ध्यति। अपि च ''उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः'' इति विवरणमनुसृत्य अस्य उत्सवस्य हर्षदायकत्वं सिद्धम्।

तिरुचानूरुक्षेत्रं तिरुशुकनूरु इत्यपि व्यवह्रियते। पद्मावती अत्रैव जन्म लेभे इति हेतोः अलिमेलुमङ्गापुरम् इत्यपि व्यवहारः श्रूयते। नारदादिमहर्षयः **पद्मसरोवरतीर्थप्रभावं एवं कीर्तयामासुः।**

**यः पद्मसरसि स्नातः सप्तजन्माघनाशनीम्।
श्रियमाप्नोति विमलां श्रियः पतिरिवामलः।।**



इति नारदमहर्षिः उवाच। एवं वशिष्ठमरीचिमुख्याः महर्षयोऽपि अस्य तीर्थस्य वैशिष्ट्यं बहुधा प्रशशंसुः।

ततश्च वयमपि कार्तिकोत्सवेषु सन्निहिता भूत्वा देव्या अनुग्रहं लप्स्यामहे।

**लक्ष्मीं क्षीरसमुद्रराजतनयां श्रीरङ्गधामेश्वरीं**
**दासीभूतसमस्तदेववनितां लोकैकदीपाङ्कुराम्।**
**श्रीमन्मन्दकटाक्षलब्धविभव ब्रह्मेन्द्रगङ्गाधरां**
**त्वां त्रैलोक्यकुटुम्बिनीं सरसिजां वन्दे जगन्मातरम्।।**

जगतः माता महालक्ष्मीः, पिता महाविष्णुरिति सुविदितमेव। इयं महालक्ष्मीः भगवतः अवतारसमये नित्यानपायिनीरूपेण तमनुसृत्य अवतरति। अत एव उक्तम् **''राघवत्वेऽभवत् सीता रुक्मिणी कृष्ण जन्मनि''** इति अर्थात् यदा महाविष्णुः रामो बभूव, तदा महालक्ष्मीः सीता रूपण अवतीर्णा आसीत्। कृष्णावतारे रुक्मिणी बभूव।

कलियुगे महाविष्णुः अखिलाण्डकोटिब्रह्माण्डनायकः इति प्रसिद्धः अर्चामूर्तिरूपेण वेङ्कटाचले अवततार। तदा सा महालक्ष्मीः पद्मावतीस्वरूपं धृत्वा तमनुसृत्य तद्वक्ष स्थले अवर्तत। वेङ्कटेश्वरमुद्दिश्य यथा विविधाः उत्सवाः क्रियन्ते तथैव पद्मावतीमुद्दिश्यापि विधीयन्ते।

वेङ्कटेश्वरः वैकुण्ठं परित्यज्य लक्ष्मीमन्विष्यन् भूलोकं आगत्य सुवर्णमुखीतीरे सप्तगिरीश्वरत्वेन प्रतिष्ठितो बभूव।

महाविष्णुः आकाशवाणीप्रेरणया तिरुचानूरुक्षेत्रं गत्वा तत्र पद्मसरस्तीरे द्वादशवर्षपर्यन्तम् लक्ष्मीं प्रति तपः तेपे। कपिल-महर्षि वचनानुसारेण लक्ष्मीः विष्णोः सकाशं गन्तुं कृतनिश्चयाऽभूत्।

तदा कार्तिकमासे शुक्लपक्षे पञ्चम्यां तिथौ महालक्ष्मीः व्यूहलक्ष्मीः, वीरलक्ष्मीः इति मूर्तिद्वयं स्वीकृत्य पश्चात् आविर्बभूव। व्यूहलक्ष्मीः विष्णोः वक्षसि स्थापिता। द्वे अपि लक्ष्म्यौ पद्मात् अविर्भूते इति हेतोः पद्मावतीनाम्ना प्रसिद्धिं प्रापतुः।

एवं च महालक्ष्मीः तिरुचानूरुक्षेत्रे वीरलक्ष्मीरूपेण स्थित्वा श्रियः पुरुषकारस्वरूपं प्रकटयति। तिरुमलक्षेत्रे यथा विष्णुनियोगमनुसृत्य ब्रह्मणा ब्रह्मोत्सवाः क्रियन्ते तद्वत् तिरुचानूरु क्षेत्रेऽपि पद्मावतीमुद्दिश्य कार्तिकमासे तज्जन्मदिनं पुरस्कृत्य ब्रह्मोत्सवाः देवस्थानेन विधीयन्ते। यथा तिरुमलक्षेत्रे विविधवाहनसेवाः प्रवर्तन्ते तथैव अत्रापि वाहनसेवाः प्रचलन्ति। भक्ताः सहस्रशः समागत्य देवीं दृष्ट्वा अमन्दमानन्दमनुभवन्ति। तत्र क्रियमाणम् आराधनाधिकं सर्वमपि पाञ्चरात्रागमपद्धति मनुसृत्य विधीयते। उत्सवकाले नाट्य-संगीत-प्रवचन-पारायणादिककार्यक्रमाः वेङ्कटाचलोपरि यथा प्रचलन्ति तथैव अत्रापि प्रचलन्ति। विशिष्य पद्मावतीजन्मदिने कार्तिकशुक्लपञ्चम्यां पञ्चमीतीर्थमहोत्सवः महता संरम्भेण प्रवर्तते। लक्षशः जनाः उत्सवदर्शनार्थमागच्छन्ति। अनेके चक्रस्नानसन्दर्भे सरसि स्नानं कृत्वा धन्या भवन्ति।

एवं तिरुमलक्षेत्रे इव तिरुचानूरुक्षेत्रे अपि क्रियमाणाः ब्रह्मोत्सवाः सुप्रसिद्धाः भक्तजनानुग्रहहेतवश्च भवन्ति।





सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः।



# पुराणेषु पद्मावतीदेव्याः वैशिष्ट्यम्

- श्री पराशरम् भावनारायणाचार्युलु, चरवाणी - ९०००६६६३३६

परमात्मनो हरेर्नित्यकल्यामूर्तिः वेङ्कटपतेः पट्टमहिषीः अलमेलुमङ्गा। कृतयुगे भृगुमहर्षेः पुत्रीरूपेण तदनन्तरं क्षीरसागरतनयात्वेन उद्भूता श्रीमहालक्ष्मीः कलियुगारम्भे पद्मतडागतः 'अलर् मेलु मङ्गा' इत्याविर्भूता। त्रिमूर्तिषु सत्वगुणसम्पन्नः कः इति ज्ञातुमेकदा भृगुमहर्षिः प्रस्तिस्थितवान्। सत्यलोकं गत्वा गत्वा ब्रह्मदेवं, कैलासं गत्वा परमशिवमपरीक्षयत्। अनन्तरं साक्षात् वैकुण्ठं गत्वा शेषशय्यायां लक्ष्म्या सह सम्भाषणं क्रियमाणं श्रीमन्नारायणं, तस्य पादेन श्रीमन्नारायणस्य वक्षस्थले अप्रहारयत्। प्रहारितश्चेदपि देवदेवः सः श्रीहरिः तस्य भृगुमहर्षेः अहङ्कारंस्सर्वमपि तस्य पादे विद्यमान नेत्रे भवति। पादनेत्रनिर्मूलन भृगुः अहङ्कारगर्वमपि तस्य पादे विद्यते। विद्यमान नेत्रे भवति। पादनेत्रनिर्मूलने भृगुः अहङ्कारगर्वमनोविकारान् त्यक्त्वा तं देवदेवं अनन्तसत्वमूर्तित्वेन अङ्गीकरोति, नमस्करोति च।

विष्णुवक्षःस्थलं लक्ष्म्याः स्थानम्। तस्याः स्थाने भृगुः प्रहारमकरोत्, तथापि श्रीमहाविष्णुः तमसेवयत् इति विष्णोरुपरि कुपिता श्रीमहालक्ष्मीः स्वस्याः तीव्रापमानो जातः इति वैकुण्ठं त्यजति। श्रीमहालक्ष्मीमनसुरन् श्रीमन्नारायणोऽपि ततः स्थितवान्।

विष्णोरुपरि कुपिता महालक्ष्मीं साक्षात् पाताले कपिलमुनेः आश्रमं गत्वा तत्र किञ्चित्कालं आसीत्। अगस्त्यमहर्षिः भूलोके कोल्हापुर्यां लक्ष्मीम् अर्चामूर्तिरूपेण प्रतिष्ठाप्य नित्यं सेवमानः आसीत्। तेन सुप्रीता सुप्रसन्ना महालक्ष्मीः कोल्हापुरीमध्यतिष्ठत्। महर्षयः तां महालक्ष्मीं सेवमानः कालं यापयन्तः आसन्। लक्ष्म्याः अन्वेषणरतः

(पि.टि.वो. ३५)

# तिरुचानूरु श्रीपद्मावतीमातुः कार्तिकब्रह्मोत्सवः

२०२० तः नवम्बर् ११तः १९ पर्यन्तम्

११-११-२०२० सौम्यवासरः
प्रातः तिरुच्चि उत्सवः, ध्वाजारोहणम्
रात्रौ - लघुशेषवाहनम्

१२-११-२०२० बृहस्पतिवासरः
प्रातः महाशेषवाहनम्
रात्रौ - हंसवाहनम्

१३-११-२०२० भृगुवासरः
प्रातः मौक्तिकमण्डपम्
रात्रौ - सिंहवाहनम्

१४-११-२०२० स्थिरवासरः
प्रातः कल्पवृक्षवाहनम्
रात्रौ - हनुमद्वाहनम्

१५-११-२०२० भानुवासरः
प्रातः आन्दोलिकासेवा
रात्रौ - गजवाहनम्

१६-११-२०२० इन्दुवासरः
प्रातः सर्वभूपालवाहनम्
रात्रौ - गरुडवाहनम्

१७-११-२०२० भौम्यवासरः
प्रातः सूर्यप्रभावाहनम्
रात्रौ - चन्द्रप्रभावाहनम्

१८-११-२०२० सौम्यवासरः
प्रातः रथोत्सवः
रात्रौ - अश्ववाहनम्



१८-११-२०२० बृहस्पतिवासरः
प्रातः चक्रस्नानम्
रात्रौ - ध्वाजवरोहणम्

# तिरुमलतिरुपतिदेवस्थानम्



**तिरुमल श्री स्वामिनः आलये एकांतेन निर्वाहित पार्वेट उत्सवदृश्यम्**



तरिगोण्ड वेंगमांब नित्यान्नप्रसाद भवनं तिरुमलक्षेत्रे भक्तैः भाषमाणाः ति.ति.दे कार्यनिर्वहणाधिकारी डा. के.एस्. जवहर् रेड्डि ऐ.ए.एस्. अडिषनल् कार्यनिर्वहणाधिकारी श्री ए.वी. धर्मारेड्डि ऐ.डि.इ.एस्, महोदयाः



ति.ति.दे कार्यनिर्वहणाधिकारी डा.के.एस्.जवहर्रेड्डि ऐ.ए.एस्. महोदयः अन्यैः ति.ति.दे. उन्नताधिकारिभिः तिरुमलक्षेत्रे बहुप्रदेसेषु पर्यटित परिशीलित दृश्यम्



लोककल्याणार्थं ति.ति.देवस्थानेन स्वीकृत षोडशदिन सुंदरकांडपारायण दीक्षायाः परिपूर्तिसमये प्रचलित पुर्णाहुति कार्यक्रमे भागंगृहिताः ति.ति.दे कार्यनिर्वहणाधिकारी डा.के.एस्. जवहर्रेड्डि ऐ.ए.एस् महोदयः, अन्ये उन्नताधिकारिणः।



ति.ति.दे. कार्यनिर्वहणाधिकारी डा.के.एस्.जवहर्रेड्डि ऐ.ए.एस्. महोदयः तिरुचानूरु श्री पद्मावती मातुः दर्शन दृश्यम्।



नवरात्रिउत्सवाणां परिपूर्णसमये तिरुचानूरु श्रीपद्मावतीमातुः उत्सवमूर्तेः श्रीमहालक्ष्म्याः अलंकारे गजवाहनोपरि भक्तानां साक्षात्कारित दृश्यम्।



तिरुमल क्षेत्रे कल्याणकट्ट प्रदेशं परिशीलितवन्तः ति.ति.दे. कार्यनिर्वहणाधिकारी डा.के.एस्.जवहर् रेड्डि ऐ.ए.एस् अडिषनल् कार्यनिर्वहणाधिकारी श्री ए.वी.धर्मारेड्डि ऐ.डि.इ.यस्. महोदयाः।



केन्द्रविजिलेन्स् कमीषन् आदेशमनुसृत्य जातीयस्थरे समीपकाले निर्वाहित अविनीतेः व्यतिरेक, भद्रतावगाहन वारोत्सवेषु भागत्वेन ति.ति.दे. उद्योगिभिः प्रतिज्ञांकारयन्तः ति.ति.दे. कार्यनिर्वहणाधिकारी डा.के.एस्.जवहर् रेड्डि,ऐ.ए.एस्. श्री ए.वी.धर्मारेड्डि ऐ.डी.इ.एस्. संयुक्तकार्यनिर्वहणाधिकारी श्री बसंत्कुमार् ऐ.ए.एस्. संयुक्तकार्यनिर्वहणाधिकारी एस्.बार्गवी ऐ.ए.एस्. महाभागाः

# तिरुमलतिरुपतिदेवस्थानम्



आन्ध्रप्रदेश देवादायशाख स्पेषल् कमीषनर्
श्री पि.अर्जुन्राव् ऐ.ए.एस्. ति.ति.दे.
धर्मकर्तृमण्डलेः एक्स् अफिषियो
सभ्यत्वेन प्रमाणस्वीकारित दृश्यम्।



२-१०-२०२० दिनाङ्के आन्ध्रप्रदेश्
देवादायाशाख कार्यदर्शि
श्री एम गिरिजा शंकर् ऐ.ए.एस्. महोदयः
ति.ति.दे. धर्मकर्तृमण्डलेः एक्स् अफिषियो
सभ्यत्वेन प्रमाणस्वीकारित दृश्यम्।





१०-१०-२०२० दिनाङ्के ति.ति.दे. नूतनकार्यनिर्वहणाधिकारित्वेन डा के.एस्. जवहर् रेड्डी ऐ.ए.एस्
महोदयाः कार्यभारस्वीकरणानन्तरं श्रीवेङ्कटेश्वरस्य मन्दिरे उन्नताधिकारिभिः सह ...

श्रीमन्नारयणोऽपि कोल्हापुरीमागत्य श्रीमहालक्ष्मीं संसेवमानमसीत्। परन्तु लक्ष्मीः न तुष्टा, न सुप्रसन्ना। एकस्मिन् दिने लक्ष्म्याः वियोगमसहमानः लक्ष्मीं प्रसन्नां कर्तुं तपश्चरन्तं श्रीमन्नारायणमुद्दिश्य आकाशवाणी सरस्वती एवं श्रावयति-

अथाऽब्रवीत्तदा विष्णुमशरीरा सरस्वती
विष्णोः! प्रसीद भगवान्! लक्ष्मीदर्शनलालस!
इतो दक्षिणतो गच्छ कृष्णवेण्याश्च दक्षिणे
द्वाविंशो योजने विष्णो! सुवर्णमुखरी नदी
तीरमासाद्य तस्यास्त्व मुत्तरं मुनिसेवितम्
कुन्तेनाऽहत्य तत्तीरे सरः कृत्वा तपः कुरु
आहत्य देवलोकात् त्वं सुवर्णकमलानि च
संस्थाप्य तस्मिन् सरसि सर्वाणि कमलानि च
तत्तीरे पुष्पजातीश्च पुष्पवृक्षशतानि च
पद्माऽरामे च सरसि पद्मायाः पद्मवल्लभ!
जपन्नेकाक्षरमनुं सहस्राक्षरमेव वा
अर्चयन् कमलैः पद्मां द्वादशाब्दं वस प्रभो
ततः प्रसन्ना सा देवी स्वयमाविर्भविष्यति
सुवर्णकमले देव! सुवर्णकमलाकृतिः
पद्मपुराणम् - ३४ आध्यायः - १३-१९

अशरीरवाणी सरस्वती एवं कथयति यत् - हे महालक्ष्मीलालस! श्रीमन्नारायण! इतः साक्षात् दक्षिणदिशि द्वाविंशद्योजनदूरे सुवर्णमुखीतीरं गच्छतु। तत्र बहवः महर्षयः तपोमग्नाः सन्ति। भवानपि स्वर्णमुख्याः नदीतीरे पद्मसरोवरमेकं निर्माय, देवलोकात् स्वर्णकमलानि आनीय तस्मिन् सरोवरे प्रतिष्ठाप्य तत्रैव लक्ष्मीं जपन् द्वादशवर्षाणिवदुपास्यति चेत् सा महालक्ष्मीः अवश्यं प्रसन्ना भविष्यतीति'' श्रुत्वा श्रीमन्नारायणः स्वर्णमुखीतीरे विद्यमानं तिरुचानूरुक्षेत्रमागच्छति।

वायुदेवसाहाय्येन देवलोकात् स्वर्णकमलानि आनीय पद्मसरोवरे प्रतिष्ठापयति। कोल्हापुरतः शेषाचलमार्गे



श्रीमन्नारायणः पद्मसरोवरं प्रति आगतवान्। सरस्वत्युक्तप्रकारेणं स्वर्णमुखीतीरे पद्मसरोवरसमीपे तस्य तपोदीक्षानुकूलं दिव्यप्रकृतिकवातावरणं प्रकल्प्य स्वर्णकमलप्रबोधकं सूर्यस्य अर्चामूर्तिमपि प्रतिष्ठापयति।

''विष्णुस्सूर्यं'' प्रतिष्ठाप्य प्राङ्मुखं सरसस्तटे
अर्चयन् पङ्कजाधीशं कमलावाप्तये विभुः''
- पद्मपुराणम् ३४ अध्यायः ३४

पद्मसरोवरस्य पूर्वभागे पद्मप्रबोधकं सूर्यं प्रतिष्ठाप्य श्रीमन्नारायणः कठोरतपोदीक्षामाचरितवान्।

त्रिसहस्त्रं जपन्नित्यं दशांशं तर्पयन् विभु।
अर्चयन् पद्मसाहस्त्रैः दिव्यैः काञ्चनसम्भवैः
तर्पयन् पद्मसरसो रसेनोपसिं माधवः
क्षीराहारो यताहारो लक्ष्म्याराधनतत्परः
तद्भानुसन्निधौ तीरे पश्चिमाभिमुखो विभुः
दीक्षां विवेश देवेशो द्वादशाब्दमनन्यधीः।
- पद्मपुराणम् - ३४ अध्यायः - ३६-३८

प्रतिनित्यं लक्ष्म्याः मन्त्रं त्रिसहस्त्रवारं जपन्, सहस्रपद्मैः अर्चयन्, मिताहारेण सह दुग्धमेव स्वीकुर्वन् पद्मसरोवरसमीपे सूर्यसन्निधौ १२ वर्षाणि यावत् (द्वादश) श्रीमन्नारायणः कठोरदीक्षामाचरितवान्। अनन्तसत्वतेजोनिधेः श्रीमहाविष्णोः तपोदीक्षां भङ्गं कर्तुं अशक्ताः ताः

द्वादशवर्षात्मकं श्रीमन्नारायणस्य तपः सफलं सञ्जातम्।
ततस्त्रयोदश वर्षे कार्तिके शुक्लपक्षके
पञ्चाम्यां शुक्रवारे च मुहूर्ते मन्त्रसञ्ज्ञके।।
ववु पुण्या सुखा वाता उत्तराषाढ तारके।
प्रसन्नं सलिलं सर्वं त्रैलेवयान्तर्गतं द्विज।
सुप्रभो भानुमानसीत् प्रसन्नानि मनांसि च।
ततः पद्मसरोर्मध्ये तेजोराशिर्महानभूत्।
बालभानुसहस्राभः सुवर्णसदृशच्छविः।
तन्माध्ये काञ्चनैः पद्मैः निर्मितो रथमुत्तमः।
पद्माभिर्धृतपन्दश्च चतुर्भिर्मदगन्धिभिः।
तन्मध्ये काञ्चने पद्मे सहस्रप्रदळशोभिते।।
तत् तत्पद्मकर्णिकामध्ये पद्मासनसमन्विता।
पद्महस्ता पद्मनेत्री श्वेतपद्मा पदद्वया।।
सुवर्णपद्ममुकुलद्वयशोभिकुचानता।



स्मेरपद्मरजोगन्धि समुच्छ्वासमुखाम्बुजा।।
बिम्बाधर सुसंमवृद्ध स्मितशोभिसुधारसा।
सम्पल्लक्ष्मी समावास विशालनयनद्वया।।
सर्वरत्नसमुक्षिप्तजाम्बूनदविभूषणा।।
कर्णिकोत्पलताठङ्क मौक्तिकालकबन्धना।।
आमुक्तमुक्तामकुटकटकाङ्गदकङ्कणा।
विधुत्पुञ्ज प्रतीकाश तितिचित्राम्बरचित्रिता।।
मन्दस्मिता मनोज्ञाङ्गी माधवं वीक्ष्य सादरं।
कल्हारमालामादाय यक्षकर्दमलेपनाम्।
सुगन्धितुलसीदूर्वामधूककमलोत्पलाम्।
स्थिता पद्मरतेदेवी देवं वीक्ष्य चतुर्भुजम्।।
ततो देवगणास्सर्वे वादयन् देवदुन्दुभीः।
शङ्खानापूरयामासुः वीणाश्च मुमुचुस्स्वरान्।।
षड्जादीन् समतालेन गन्धर्वा ललितं जगुः।
नन्नृतुर्दिव्याप्सरसः सुस्वरं गीतलालसाः।
तूर्यघोषेण महता कृत्स्नमापूरितं जगत्
तेन घोषेण विज्ञाय श्रियः प्रत्यक्षतां विधिः।।

- पद्मपुराणम् - ३४ अध्यायः - ५६-७०

**सारांशः -**

द्वादशवर्षात्मकदीक्षात्परं त्रयोदशतमवर्षारम्भे कार्तिकमास शुक्लपञ्चम्याम् उत्तराषाढानक्षत्रयुक्तशुक्रवासरे महालक्ष्मीः पद्मसरोवरात् आविर्भूता। सरोवरमध्यभागे सुवर्णकमलैः निर्मितं रथं, रथमध्ये सुवर्णपद्मम्, सुवर्णपद्मात् महालक्ष्मीः दिव्यप्रकाशैः सुगन्धमिलितरसानुभूतीभि आविर्भूता।

अलर् - पद्मम्, मेल् - तः उद्भूता, मङ्ग - मङ्गलप्रदायिनी महालक्ष्मीः इति भावेन अलर् मेलु मङ्गा'' इव ब्रह्मादिदेवताभिः कीर्त्यमाना आपादमस्तकरत्नकनकालङ्कारभूषिता दिव्यमङ्गलध्वनिभिः आगत्य श्रीमन्नारायणाय प्रसन्ना भूयमाना महालक्ष्मीः साक्षात्कृता। पार्वतीपरमेश्वरौ, वाणीहिरण्यगर्भौ, शचीपुरन्धरौ, सनकसनन्दनादयः महर्षयः तत्रागत्य लक्ष्मीनारायणयोः समागमदिव्यदृश्यं सन्दर्श्य पुलकितमनसो देवताः पुष्पवृष्टिं वर्षयामासुः।





# दीपावल्युत्सवस्य एकं विहङ्गावलोकनम्

- डा.अजयकुमारनन्दः, साहित्याचार्यः, चरवाणि - ९१८२३४१०५२

अस्माकं देशस्य नाम भारतवर्षम्। अस्मिन् देशे नानोत्सवान् पालयन्ति। तेषु पालितेष्वेव उत्सवेषु दीपावल्युत्सवः अन्यतमो भवति।

अयं दीपावल्युत्सवः कदा आरब्धः? दीपावल्युत्सवः कस्योद्देश्येन पाल्यते? दीपावल्यां किं किं जायते? अनेके प्रश्नाः समुद्यन्ति अस्माकं समेषां भारतीयजनानां मानसे। अतः एतद्विषये अल्पां दृष्टिं प्रसारयामः वयम्। कार्त्तिकमासस्य अमावास्यायां तिथौ दीपावल्युत्सवोऽयं सर्वत्र परिपाल्यते।

पौराणिकानां मते उच्यते यत् - आयुर्वेदस्य प्रसिद्धाचार्यः धन्वन्तरी दीपावल्याः दिनद्वयात्प्राक् जनेभ्यः सञ्जीवनौषधं दातुं प्रादुरभूत्। एतद्धुदेश्येन दीपावल्युत्सवोऽयं समाचर्यते।

ऐतिहासिकग्रन्थस्य रामायणस्य आधारेण ज्ञायते यत्- त्रेतायुगे मर्यादापुरुषोत्तमः रामः पितुराज्ञया चतुर्दशवर्षाणि यावद्वनमगात्। चतुर्दशवर्षाणि यदा पूरितानि तदा श्रीरामचन्द्रः भ्रात्रा लक्ष्मणेन धर्मपत्न्या सीताया सह काननादाजगाम। तेषामागमनवार्तां निशम्य सर्वे अयोध्यावासिनः आनन्देन निजनिजगृहेषु दीपप्रज्वालनमकुर्वन्। तस्मादेव दिवसादयमुत्सवः सम्पूर्णेऽस्मिन् भारतभूखण्डे परिपाल्यते।

जैनसम्प्रदायजनानामभिप्रायः यत् - अस्मिन्नेव दिवसे महावीरजिनः निर्वाणमगात्। तन्निर्वाणमुपलक्ष्य उत्सवोऽयं समनुष्ठीयते।

आर्यसम्प्रदायस्य इदमेवाभिमतं यत् - अस्मिन्नेव दिने आर्यसमाजस्य प्रतिष्ठापकस्य स्वामिदयानन्दस्य तन्निर्वाणमभवत्। तन्निर्वाणमाश्रित्य उत्सवोऽयं सम्पाल्यते।

सिक्कसम्प्रदायस्य अभिप्रायः अयं यत् - अस्मिन्नेव दिवसे सिखजनानां पञ्चमगुरुः हरिगोविन्दसिंहमहोदयः कारावासान्मुक्तोऽरभूत् तस्मात्कारणादुत्सवोऽयं समाचर्यते।

दीपावल्युत्सवस्य मुख्यलक्ष्यं भवति - अन्धकारादालोकं प्रति नयनम्। इदं च वचनमास्माकं

बृहदारण्यकोपनिषदि वर्तते -

''तमसो मा ज्योतिर्गमय''॥

ये दुष्टाः दुर्जनाः आततायिनः भवन्ति तेषां कृते शिक्षां दातुं तथा तेषामेव सन्मार्गे आनयनम् अस्मान् शिक्षयतीति बृहदारण्यकोपनिषत् कथयति -

"असतो मा सद्गमय"॥

अस्मिन्नुत्सवे सर्वे स्वस्वगृहाणि प्रक्षालयन्ति, धनलक्ष्मीं गणाधीशं गणेशं च श्रद्धया पूजयन्ति। नूतनानि परिधानानि, आभूषणानि च परिधरन्ति। बाल-युवती युवकाश्च सर्वे अनेकाः क्रीडाः आचरन्ति। सुमधुरभोजनद्रव्यं निर्माय देवेभ्यः समर्पयन्ति। तदनु प्रसादरूपेण तदानीय सुखेन अश्नन्ति। वर्षऋतोः गमनात्परं कीटादयः। भूमौ समुत्पद्यन्ते। अतः तेषां विषकीटानां नाशार्थं विस्फोटकादीन् विस्फोटयन्ति जनाः। ये व्यापारिणः भवन्ति ते व्यापारकार्यारम्भम् अस्मादेव दिनात् कुर्वन्ति लक्ष्मीप्राप्तित्वात्।

भारतवर्षे यावन्ति मन्दिराणि सन्ति तेषु समेषु मन्दिरेषु दीपावल्युत्सवोऽयमाडम्बरेण परिपाल्यते। विशिष्य बृन्दावनस्थकृष्णमन्दिरे, काशीविश्वनाथमन्दिरे, श्रृङ्गेरीशारदापीठे, काञ्चीपुरस्थकामाक्षीमन्दिरे, तिरुपतितिरुमलवेङ्कटेश्वरदेवालये, पूरीजगन्नाथालये, आसामस्थकामाक्षीपीठे अयमुत्सवः महता वैभवेन आडम्बरेण परिपाल्यते। एतेषु मन्दिरेषु लक्षात्मकदीपान् प्रज्वाल्य अन्धकाररूपितमोगुणं विनाश्य प्रकाशरूपिसत्त्वगुणपरमात्मनि भक्तिभावं प्रकटयन्ति जनाः। सर्वेषां भारतीयानामेका इयं प्रार्थना भवति यत् -

दीपं ज्योतिर्परं ब्रह्म
दीपं ज्योतिर्जनार्दनः।
दीपं ज्योतिस्सनातनः
पूजादीपं ज्वालयाम्यहम्॥

न केवलं भारतवर्षे अपि तु श्रीलङ्का, गोयाना, फिजि, बाङ्गलादेशः, पाकिस्तान, ब्रह्मदेशः, थाइलाण्ड, काम्बोडिया, मालवदेशः, नेपालः, भूटान् अमेरिका, इंग्लण्ड् जापानादिषु देशेषु उत्सवोऽयं नवजीवनाय, धनाय, आरोग्याय च परिपाल्यत इति। दीपप्रज्वालनप्रथायाः अनेकानि निदानानि भवन्ति।

तत्र तावदुच्यते - श्रीरामचन्द्रः लङ्कापतिं रावणं मारयित्वा अयोध्यानगरीं प्रत्यावतृते। रामस्य स्वागताभिनन्दनाय अयोध्यापुरवासिनः दीपसमूहान् ज्वालयित्वा स्वागतं चक्रुः।

श्रीमद्भागवतविष्णुपुराणयोः अभिमतं यत् एतस्मिन् दिवसे भगवान् कृष्णः आततायिराजस्य नरकासुरस्य हननमकरोत्। तेन जनाः तद्राक्षसे मृते सति अपारानन्दमन्वभवन्। येन घृतयुतदीपं प्रज्वाल्य कृष्णस्य स्वागतमकुर्वन्।

नरसिंहोपपुराणस्य मते - अस्मिन् दिने नरसिंहावतारी भगवान् विष्णुः हिरण्यकशिपुं मारयामास।

ब्रह्मपुराणानुसारेण देवासुरयोः संग्रामः अद्यतने दिने अभूत्।

दीपावल्युत्सवस्य उल्लेखः काव्यनाटकादिषु ग्रन्थेषु उपलभ्यते -

हर्षवर्धनरचितस्य नाटकस्य नाम नागानन्दः भवति। इदं नाटकं सप्तमशताब्द्यां रचितमभूत्। तन्नाटके दीपावल्युत्सवस्य नाम दीपप्रदीपोत्सवः इत्यस्ति।

दीपप्रदीपोत्सवे दीपं प्रज्वालयन्ति।
नूतनविवाहितवधूमाहूय उपहारं प्रयच्छन्ति।

यायावरीयोपाधिभूषितः कविः राजशेखरः स्वस्य काव्यमीमांसाग्रन्थे दीपावल्युत्सवस्य उल्लेखमकरोत्। परन्तु तद्ग्रन्थे दीपावलीस्थाने "दीपमालिका" इति शब्दस्य प्रयोगः विहितः। तत्र दीपसमूहान् मालारूपेण सज्जयन्ति। तस्मात् दीपमालिकोत्सवः इति कथ्यते।





## सर्वेभ्यः 'सप्तगिरि' पाठकेभ्यः

## दीपावळी शुभाशयाः





# पुष्करं तं नमाम्यहम्

- डा.पो.प्र.वें.दु.नागत्रिशूलपाणिः, चरवाणी - ९४४०००६४३९

पुष्करपदविषये विद्यमानेषु बहुषु अर्थेषु जलं अर्थात् आप इत्यपि एकोऽर्थः। महात्मानः वेदर्षयः अपां प्राधान्यं बहुकालात्पूर्वमेव ज्ञातवन्तः।'' ''आप एव ससर्जादौ तासु वीर्यमपाश्रृणोत्'' इति उपनिषद्वचनम्। भगवान् आदौ आपः एव ससर्ज। तत्र तस्य शक्तिं निक्षिप्तवान् इति अर्थोऽस्य वचनस्य। ''आपो वा इदगं सर्वमिति'' मन्त्रमपि अपां प्राधान्यं व्यनक्ति। ''योऽपामायतनं वेद आयातनवान् भवति'' इति मन्त्रपुष्पं अपां मूलं यः जानाति सः परं धाम गच्छतीति विशदयति। विष्णुं 'अपां निधिरिति' स्तौति महाभारतन्तर्गतं विष्णुसहस्रनामस्तोत्रम्। ''मलनिर्मोचनं पुसां जलस्नानं दिने दिने'' इति जलमस्मदीयमलिनं नित्यम् अपकर्षति। तावता न, भक्त्या यः निर्दिष्टकाले निर्दिष्टनद्यां स्नानं करिष्यति तत्रस्थाः आपः तस्यान्तःकरण शुद्धिमपि करिष्यन्ति। तेन नदीगतजलेन सः अपगतपाप्मा भवति। अतएव प्राचीनार्षयः जलस्य शक्तिं मनसि निधाय अस्मानुद्धर्तुं जलपूजनिवेदिम् अर्थात् पुष्करस्नानं निर्दिष्टवन्तः।

अथ को नाम पुष्करः? तस्य कथा का?तत्र विशेषः कः इति जानीमः। पुरा तुन्दिक इति कश्चन ब्राह्मणः धर्मबद्ध जीवनं कुर्वन् उग्रेण तपसा ईश्वरमाराधितवान्। प्रसन्नः ईश्वरः तस्मै वरं दातुमैच्छत्। तदा तुन्दिलः लोकहितं अपेक्ष्य ईश्वरे एव स्थानं पृष्टवान्। सन्तुष्टः शिवः जलरुदे तस्य स्थानं प्रकल्पितवान्। जलस्य पुष्कर इति व्यवहारोऽप्यस्ति। अतः तदारभ्य सः पुष्कर इति प्रथितः। एवं सः सार्धत्रिकोटि नदीनां प्रभुश्च बभूव।

''एकदा सृष्टिकार्यनिमग्नो ब्रह्मा जलस्यावश्यकतां चिन्तयित्वा पुष्करं स्वसमीपं प्रेषयत्विति शिवं पप्रच्छ। तदा शिवः पुष्करं ब्रह्मणे दत्तवान्। ब्रह्माऽपि तं कमण्डले व्यनिक्षिपत्। पुष्करः तत्रैव न्यवसत्। एकस्मिन्समये देवगुरुः बृहस्पतिः चतुर्मुखस्य सम्मुखमागत्य महिमान्वितं पुष्करं स्वसमीपे निधातुं प्रार्थितवान्। ब्रह्मा तदर्थमङ्गीचकार। किन्तु अजेन विना पुष्करः अन्यत्र गन्तुं नैच्छत्। तस्मिन् समये परमेष्ठिः एवं मध्येमार्गं सूचितवान्। ''देवगुरुः बृहस्पतिः प्रतिवर्षम् एकस्मिन् राशौ, एकस्यां नद्यां च तिष्ठेत्। सः यस्यां नद्यां तिष्ठति तत्र पुष्करोऽपि आगच्छेत्। ब्रह्मणः उपस्थितिरपि तत्र भविष्यति। ब्रह्मणा सूचितः एषः मार्गः बृहस्पतिना पुष्करेण च अङ्गीकृतः। तदारभ्य बृहस्पतिः यस्यां नद्यां स्थास्यति तस्यां पुष्करस्य ब्रह्मणश्च आगमनं निश्चितम् अभवत्। सर्वेदेवाः तत्र आगमिष्येयुः। विशिष्य पुष्करेण सह तस्य वसे स्थितानां सार्धत्रिकोटिनदिनांम आगमनमपि तत्र भविष्यति। एषएव पुष्करसमय इति कीर्तितः। अस्मिन् समये नदीस्नानं पवित्रं शुध्दं पुण्यदं चाभवत्।

पुष्करः कदा कस्यां नद्यां प्रविशतीति विषयः एभिः श्लोकैः ज्ञायते।

**मेषे गङ्ग वृषे ...... स्मृता।।**
**कन्यायां कृष्णवेणी .....पुष्करवाहिनी**
**मकरे तुङ्गभद्रा च.... संक्रमणे स्मृता।**
**पुष्कराख्यो नदीनां हि प्रवेशोऽत्र बुधैस्स्मृतः।।**

उपर्युक्तश्लोकक्रममनुसृत्य गङ्गा, नर्मदा (रेवा) सरस्वती, यमुना गोदावरी, कृष्णा, कावेरी, ताम्रपर्णी (भीमरथी) पुष्करी, तुंगभद्रा, सिन्धु, प्रणीताख्याः सर्वेभ्यः द्वादशनद्यः पुष्करयुताः भवन्तीति ज्ञायते। पुष्करपुण्यफलं याः नद्यः प्रवहन्ति ताः पुष्करयुताः भवेयुः तथा सर्वेऽपि अपगत पाप्मानः पुण्यफलं प्राप्नुयुः इति निश्चित्य नदीनां क्रमः योजितः इति भाति।

अत्र पुष्करीति नदी प्रस्तुता। तस्याः प्राचीना कथा एवमस्ति। वज्रनाभः इत्यसुरः यदा लोकान् पीडयति स्म तदा अजः तस्योपारि जल पुष्परूपेण अर्थात् पद्मरूपेण पुष्करं



प्रेषितवान्। पुष्करस्य स्पर्शमात्रेणैव सः राक्षसः हतः। यत्र तादृशी लोकोपकारघटना जाता तत्र पुष्करस्य अंशः नदीरूपेणास्थितः। राजस्थान प्रान्ते अज्मीर समीपे पुष्करिणी नदी इदानीमपि प्रवहति। पोरवरा इत तत्रस्थाः जनाः इमां वदन्ति। बृहस्पतेः धनूराशि प्रवेशसमये अस्याः पुष्कर कालो भवति। ब्रुहस्पतिः यदा मकरस्थितो भवति तदा ब्रह्मा सर्वेदेवाः पुष्करसहित सार्थ त्रिकोटि नद्यः च तुंगभद्रा नदीं प्रति आगमिशयन्ति। एष एव तुंगभद्रानद्याः पुष्कर कालो भवति। एष समय वर्षेऽस्मिन् कार्तिकमासे शुक्लपक्षे षष्ट्यां शुक्रवासरे आगमिष्यति। अर्थात् नवम्बर् मासे विंशतिदिनाङ्कतः तुङ्गभद्रायाः पुष्करसमयः भविष्यति। एष समयः उत्तमः। कार्तिकमास एव शुभमासः। कार्तिकदामोदर इति हरि मासेऽस्मिन् आराध्यते। तथैव अभिषेकप्रियः शिवः आमास् अभिषेकयुतो भवति। अतः हरिहरयोः कृपा भवत्यस्मासु। एवं च षष्टीतिथिः स्कन्धस्य प्रियतिथिः। शुक्रवासरः लक्ष्मीप्रदः। अतः पुष्करसमयः बहुपुण्यदायक इति निश्चये वक्तुं शक्यते। नवंबरमासे विंशति दिनाङ्कतः डिसम्बर मासस्य प्रथमदिनाङ्कपर्यन्तंस्थानि द्वादशदिनानि तुंगभद्रापवित्र पुष्करदिनानि भविष्यन्ति। अस्मिन् समये स्नानं सर्वपापनिवृत्तिकरं भवति। कर्णाटकराष्ट्रे पश्चिमघट्टप्रान्ते पृथक् पृथक् उत्पन्ने तुंगा, भद्रेति नद्यौ द्वे शिमोगाजिल्लायां कूड्लिप्रान्ते तुङ्गभद्रा नदीरूपेण एकाकारं भजतः। एवं समुत्पन्ना तुङ्गभद्रा श्रृङ्गेरी, हम्पी च दृष्ट्वा कर्नूल्जिल्लायाः कौतालिमण्डले मेलगनूरप्रान्ते आन्ध्रराष्ट्रं प्रविशति। ततः मन्त्रालयं, आलम्पुरं च गत्वा एषा नदी तेलङ्गणा राष्ट्रस्थिते संगमेश्वरप्रान्ते कृष्णनद्यां संगमयति। राष्ट्रत्रये प्रवहति, तथा तत्रस्थेभ्यः सर्वेभ्यः बुहपुण्यदायिनी भवत्येशा तुंगभद्रा। एषा तुंगभद्रानदी सरस्वती नदीरूपेणापि कीर्तिता। रामायणे या पम्पानदीति ख्याता सा तुंगभद्रा एव। वालिसुग्रीवौ अत्रैव आस्ताम्। सुग्रीवं वानर राज्ये संस्थाप्य अत्र तुंगभद्रातीरे माल्यवन्तगिरौ रामः वर्षर्तुं यापयामास। शङ्कराचार्याः तुंगभद्रानदी प्रान्ते शारदापीठं स्थापितवन्तः। जंबुकेन घावितः शशकः तुंगभद्राप्रान्ते धैर्येण जम्बुकस्योपरि अपतत्। भीतः जम्बुकः पलायनमकरोत् प्रान्तस्य लक्षणमिति विद्यारण्यपादाः उक्त्वा अत्रैव हरिहरास्य विद्यानगर निर्माणाय प्रेरितवान्। ''गङ्गास्नानं तुंगापानं पवित्रमिह विद्यते'' इति तुंगभद्रायांनदीपानं सर्वेः स्तुतम्। एवं प्रसिद्धिमापन्नायां तुंगभद्रायां पुष्करकाले स्नात्वा सर्वेऽपि पापविमुक्ताः भवन्तु।



अथ पुष्करनदीस्नानं कथं कुर्यादिति प्रश्नः आगच्छति। अत्रापि नियमाः सन्ति। ये स्नातुमिच्छन्ति ते पूर्वदिने एकभुक्ताः भवेयुः। प्रातः गृहे स्नात्वा पुष्करस्नानार्थमागच्छेत्। स्नानसमये वस्त्रद्वयं धरेत्। संकल्पसहितं भक्त्या श्रद्धया च स्नानं कुर्यात्। भार्यया सह स्नानं कुर्यात्। आदौ शिरसि त्रिवारं प्रोक्षणं कृत्वा अनन्तरं पूर्णस्नानं कुर्यात्। स्नानसमये -

पिप्पलादात्समुसन्नेकृत्यन्ने कृत्ये लोकभयंकरी।
मृत्तिकां ते मया दत्तम् आहारार्थं प्रकल्पय''।।

इति पठित्वा मृतिकां किञ्चित्समर्पयेत्। तदा नदीस्था भयंकरी कृत्या दूरं गच्छति। एवं च -

गंगे च यमुने कृष्णे गोदावरी सरस्वती।
नर्मदे सिन्धु कावेरी तंगभद्रे च पुष्करी।।

ताम्रपर्णी प्राणहिते नदीभ्यस्तु नमो नमः इति पठन् स्नानं कुर्यात्। स्नानानन्तरं सुवर्णादीनि दानरूपेण दद्यात्। स्वशक्तिमनुसृत्य किञ्चिदपि दीयमानं दानं अतुलितफलं ददातीति पुष्करमहिमा। पुष्करसमये क्रियमाणानि तर्पण - पितृपिण्डप्रदानादिकार्याणि दिवंगतेभ्यः उत्तमगतिर्याप्रात्ये उपकुर्वन्ति। तैर्दत्तैः आशिषैरस्माकं जीवनमपि सुखपूर्णं भविष्यति।

पुष्करः आवर्षं मध्याह्न समये सार्धैकघण्टापर्यन्तं नद्यामेव तिष्ठति। अतः वर्षपर्यन्तं तत्र स्नात्वा अस्माभिः पुण्यमाप्तुं शक्यते। संकल्पपूर्वकमस्माभिः क्रियमाणं स्नानं मध्यस्नानं, अघमर्षणस्नानं चेत्युच्यते। स्नानानन्तरं किञ्चित् जलमपि अस्माभिः नेतव्यं भवति। ये वयसा ज्येष्ठाः, तथा कारणान्तरैः साक्षात् नदीपर्यन्तं नागताः, तेभ्यः इदं जलं दीयते चेत् तेऽपि प्रोक्षणेन अथवा लब्धं किञ्चिज्जलं गृहस्थजलेन योजयित्वा स्नानकरणेन च पुष्करस्नानतुल्यफलं प्राप्तुमर्हाः भवन्ति। अतः स्नानार्थं गताः जनाः ईदृशमुपकारं कृत्वा विशेषपुण्यं प्राप्नुवन्तु इति महान्तः वदन्ति।

जन्मप्रभृति यत्पापं स्त्रिया वा पुरुषेण वा।
पुष्करस्नानमात्रेण सर्वपापं विनश्यति।।

इति आर्षोक्तिः। पुष्करस्नानं लिङ्गभेदमविगणय्य पापराशिं दहति। सुखं पुण्यं च ददाति। अत एव पुष्करस्नानं कुर्यात्। प्रस्तुतदेशकालसामाजिकस्थितीः मनसि निधाय यथा योग्यस्नानेन पुष्करानुग्रहं वयं लभेम।

राष्ट्रत्रयं परीवृत्य सर्वकल्मषनाशिनि।
भूत्वा वहसि नित्यं हे तुंगभद्रे नमोस्तु ते।
स्नानमात्रेण भक्तानां कोटिजन्माघनाशनम्।
करोति यस्सदा प्रीत्या पुष्करं तं नमाम्यहम्।।



# श्रीनिवासदया

- डा.स.न.सम्पत्कुमारः,
चरवाणी - ९९००७८१३५६



अधुनातनकाले सुखप्राप्तये आनन्दानुभवाय च गतिरस्तीति चेत् तत् भगवतः श्रीनिवासस्य चरणकमल-ध्यानमेव। सर्वदा दुःखमेव चिन्तयतां, रोगभीरूणां, अकस्मादागतक्लेशभूयिष्ठानां शान्तिः कदा? दुःखोच्छेदः कथम्? उच्छेत्ता कः? सर्वदा एवं खलु आशास्महे "दुःखं मनागपि न भूयात् शश्वतसुखप्राप्तिः अचिरादेव भवतु इति। एतादृशी प्राप्तिः श्रीनिवासस्य निर्हेतुककृपया विना कथं सिध्यति?

**का नाम दया-** सर्वभूतहितैषित्वं दया इति श्रीव्याससूक्तिः। श्रीनिवासस्य दया ततोऽपि अग्रगामिनी सती चेतनान् रक्षति। भूरिदक्षिणालाभ एव भगवद्दयाकार्यं इति मा चिन्तयेत्। **"यत्नादपि परक्लेशं हर्तुं या हृदि जायते। इच्छा भूमिसुरश्रेष्ठ सा दया परिकीर्तिता"**। अनादिकर्मप्रवाहे पतितस्य जीवस्य कदाचित् अज्ञातयादृच्छिकादिसुकृतं व्याजीकृत्य तं रक्षितुमारभते परः। **"ददामि बुद्धियोगं तं"** इत्याह गीताचार्यः। तर्हि यादृच्छिकसुकृतमपि किमर्थम् एतावन्तं कालं न सम्भूतमिति चेत् कर्मपरम्परामध्ये यादृच्छिकसुकृतोत्पत्तेः नावकाशः अभूत्। "यदृच्छा" शब्द एव नैतावन्तं कालं तत्सुकृतमभवत् इति व्यञ्जयति।

**"ईश्वरस्य च सौहार्दं यदृच्छासुकृतं तथा।**
**विष्णोः कटाक्षमद्वेषं आभिमुख्यञ्च सात्विकैः।**
**सम्भाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः"।।**

एवं दयारूपकार्यकारणभावपरम्परया सदाचार्यप्राप्तिः भविष्यति। **"उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तित्वदर्शिनः"** इति भगवदुक्तदिशा आचार्यसकाशात् ज्ञानं लब्ध्वा उपायेषु प्रवृत्तिः। श्रीनिवासदयापात्राः यदि न भवेम, तर्हि कारणाभावात् सदाचार्यप्राप्त्यलाभः भविष्यति। ततः कर्तव्याकर्तव्यज्ञानाभावः। ततः अहङ्कारः, आसुरीसम्पदाविर्भावः, ततः सर्वत्र रोगप्रपञ्चनादि -दुःखप्रादुर्भावकरणं, ततः अशान्तिः। अन्ततः"अशान्तस्य कुतः सुखं" इति दुःखमज्जनम्। अत एव दया नास्माकं भगवतः इति निर्णयः। **"व्यसनेषु मनुष्याणां भृशं भवति दुःखितः"** इत्यार्षसूक्तिः। **परदुःखासहिष्णुत्वं दया -** इत्याचार्याः। सर्वदा दुःखिताः वयं, कारणं तावत् भिद्यते। भक्ताशनानां अस्माकं उद्धरणे दया एव दक्षा। अचित्तुल्यानां चेतनानां करणकलेबरयोगे दयायाः कारणत्वं इत्याहुः वेदान्तसूरिणः।

**"अचिदविशिष्टान् प्रळये जन्तूनवलोक्य जातनिर्वेदा।**
**करणकलेबरयोगं वितरसि वृषशैलनाथ करुणे त्वम्।।**

**कुतः श्रीनिवासस्यैव दया : -**

**"कलावात्ममहिम्नैव वशीकृत्य जनान् भुवि।**
**भक्ताभीष्टप्रदात्रे स्यात् श्रीनिवासाय मङ्गलम्"।।**

सन्ति चानेके देवताः, उपासते च जनाः तत्तदीप्सितफलाप्तये।

**"यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यम्।**
**स तया श्रद्धया युक्तः तस्याराधनमीहते।**
**लभते च ततः कामान् मयैव विहितान् हि तान्।।**

इत्याह प्रथमाचार्यः। समस्तमपि ऐहिकं आमुष्मिकं च फलं परब्रह्मणः श्रीनिवासादेव जनाः आप्नुवन्ति।

**"श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे।**
**भवतु मम परस्मिन् शेमुषी भक्तिरूपा।।"**

इति भगवद्रामानुजः तस्मिन्नेव प्रार्थनामकरोत्। अनेन श्रीनिवास एव प्राप्यः प्रापकश्च। तस्य दयया एव फलाप्तिः **"फलमत उपपत्तेः"** - इति सूत्रकारोऽपि समर्थयामास।

**दयास्तुतिः -** श्रीनिवासः चतुर्भुजत्वेन भक्तान् अनुगृह्णाति। धर्मार्थकाममोक्षाख्येन पुरुषार्थानां चातुर्विध्यम् आमनन्ति। पुरुषार्थप्रदाता कः वयं तु याचितारः - चतुर्णां पुरुषार्थानां दाता देवं चतुर्भुजः" इति भगवतः चतुर्भुजत्वे उपपत्तिः। जनिमताम् अस्माकं स्थितिस्तु तत्त्वहितपुरुषार्थज्ञानाभावात् क्लेशमयी दृश्यते। तदपनोदनाय भगवति भक्तिः विहिता। भक्तिर्नाम "महनीयविषये प्रीतिः, भक्तिः" सा च स्मृतिसन्ततिरूपा" इत्याचार्याः। परभक्तिः, परज्ञानम्, परमभक्ति इति सोपान क्रमः।

"यदि भवति मुकुन्दे भक्तिरानन्दसान्द्रा। विलुठति चरणाब्जे मोक्षसाम्राज्यलक्ष्मीः"। इत्येतादृशी भक्तिः भगवद्गुणानुभवेन विना कथं सिद्ध्यति। अतः तद्गुणवर्णनपराः स्तुतयः आचार्यैः श्रीनिगमान्तसूरिभिः परमया कृपया अनुगृहीताः। "एकत्रासतः अन्यत्र च सतः गुणगणस्य अधिरोप्य भणितिः स्तुतिः" - इति स्तुतिशब्दार्थः। सकलकल्याणगुणाकरे भगवति एतच्छब्दार्थः न कथञ्चिदपिकदाचिदपि नान्वेति।

**५.दयापात्रत्वं -** "न स्थानतोऽपि परस्य, उभयलिङ्गं सर्वत्र हि इति सूत्रकारः। अखिलहेयप्रत्यनीकः, अनन्तकल्याणगुणैकतानः श्रीनिवासः। सर्वशक्तियोगित्वं भगवति श्रीनिवासे **"परास्य शक्तिः विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च"**। "सर्वज्ञः सर्वशक्ति, ज्ञानबलर्द्धिमान्" इत्याद्याः स्मृतयः अत्र प्रमाणपदवीमर्हन्ति।

**"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः।**
**भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः"॥**

अत एव भगवान् श्रीनिवासः इत्याभिधानम्। तद्दयापात्राः भवेम इत्येव आशंसनम्। भगवतः प्रधानभूतेषु षट्सु गुणेषु ज्ञानस्वरूपस्य गुणस्य परिपाकरूपा तत्कार्यभूता दया नाम प्रथमो गुणः। **"जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते"** इति सृष्टेः प्रागेवाङ्कुरितः एषः गुणः। मेघनादः इति रावणपुत्रस्य नामधेयम्। मेघ इव नादः - जनयतैव इति जनयन्नेव तेनरौदीत्। स तु आसुरः गुणः।
जायमानं हि पुरुषं ये पश्येन्मधुसूदनः" इत्युक्तनयेन भगवतः कृपाकटाक्षं यस्योपरि परिपतति, स एव अभिलषितफलभाक् भवति।

**दयाकार्याणि -** अद्यतनेऽपि काले शेषाद्रिम् आरोहाणाः भक्तजनाः वृषगिरीशं गोविन्दनाम्ना उच्चास्वरेण स्वक्लेशापगमनाय उच्चारयन्तः दृश्यन्ते। ततः शान्तिं तेऽनुभवन्ति इति तु प्रत्यक्षसिद्धः विषयः। शान्तिप्राप्तिः कथम् इदानीम् भक्तानाम् उपरि भगवत्कटाक्षपातः सञ्जातः इत्येवात्रानुमीयते। एतादृशस्थितये भगवद्दया एव हेतुः -

**"कलशोदधिसम्पदो भवत्याः करुणे सन्मतिमन्थसंस्कृतायाः।**
**अमृतांशमवैमि दिव्यदेहं मृतसञ्जीवनमञ्जनाचलेन्दोः।**

इत्यस्तौषीदाचार्याः। यथा नवनवदुकूलपीताम्बराद्यलङ्कृता नर्तकी रङ्गप्रवेशमात्रेणैव रसिकान् अन्यांश्च सामाजिकान् वशयति, तथैव अनेकवर्णविचित्रा त्रिगुणात्मिका भगवतः शक्तिः प्रकृतिरपि चेतनान् वशयति-वशेव यूथपम्। एवमेव विविधविचित्राश्चर्यकरकार्यकरी भगवतः दया कथञ्चित् तेनापि अनुल्लङ्घनीया भगवन्तं स्ववशे करोति। दयया बद्धत्वात् विक्षिप्तः भगवान् स्पन्दितुमपि न शक्नोति। कर्म यत्तत् बन्धकं नियतफलप्रदञ्च। चेतनस्य यथा कर्मानुभवः तथा भगवतोऽपि एकः अनुभवः

**भक्तजनवात्सल्यात् तदतिक्रमितुं भगवानपि न क्षमः।**
**अतः कुतः चिन्त्यते वृथा चिन्तनातः को लाभः?॥**

**भगवद्दयाविषये - आचार्योपदेशः -**

**"परित्राणाय साधूनां विनाशाय च दुष्कृताम्।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे"॥**

इति प्रथमाचार्योक्तिस्वारस्यम् अनुभवन्तु। भगवदवतारविषयकः श्लोकः अवतरणप्रयोजनं निरूपयति। यदिदया न स्यात् भगवतः - कथमवतरणं? यदि इयमेका न स्यात् तर्हि भगवति असत्प्रायाः भवन्ति इतरे गुणाः। अपि च एकया दयया विहीने भगवति इतरे गुणाः दोषतामपि प्राप्नुयुः। एवंविधां वृषाद्रीशितुः श्रीनिवासस्य अनन्तदयैकसागरस्य भगवतः हृदयगुहाविहारिणीं दयां स्वहृदये भूयोभूयऽनुभूय प्रशिथिलमनाः तत्रभवान् श्रीनिगमान्तमहागुरुः शतकेन तां निर्वर्णयामास।

श्रियः पतेः शेषाद्रिनिलयस्य श्रीनिवासस्य दयाप्रवाहे निमज्जतः तथैवोन्मज्जतः सर्वतन्त्रस्वतन्त्रस्य अपूर्वा अनर्घा च कृतिः "दयाशतकं" नाम। भक्तजनानां भक्तिरसप्रवाहः, भागवतशेषत्वकाष्ठानिष्ठानां कैङ्कर्यप्रचोदनं, श्रोतृणां श्रुतिमाधुर्यं, संसारदावानलतप्तचित्तानां शीतलतरविमलसलिलपरिप्लुत-विशाल महाहृदावगाहः। किं बहुना, दयया विना किमपि न सिध्यति, यत्सिद्धं तत्सर्वं दयाकार्यमेव। अतः दयापात्राः यदि भवेम तर्हि अत्यन्तशान्तिं अनुभवेम। न कुत्रापि अशान्तिः दृष्टा भवति।

श्रीनिवास एव सर्वदा प्राप्यः प्रापकश्च। श्रीनिवासः कृषीवल इव स्वयमनादिकर्षकः स एव श्रियया निवसन् चेतनान् स्वपुरुषार्थतया आप्नोति इत्याचार्यवाणी।

**"समयोपनेतैः तव प्रवाहैः अनुकम्पे कृतसंप्लवा धरित्री।**
**शरणागतसस्यमालिनीयं वृषशैलेशः कृषीवलं धिनोति॥**

कृषकः कृषिरिव अस्मान् परिरक्षति।

**वन्दे वन्दारुमन्दारं तं वृषाद्रिविहारिणम्।**
**यत्कृपा वितरत्यारात् पुरुषार्थचतुष्टयम्॥**

इदानीं रोगभयात् या स्थितिः वर्धमाना दृश्यते, सा श्रीनिवासध्यानेन एकान्तस्थलोपवेशनेन निरस्तेतरजनसंसर्गेण अपगच्छति। ध्यानात् शान्तिः दयायाः लाभश्च सिध्यति। भगवद्दयापात्राणां सर्वदा सर्वत्र मङ्गलमेव। स एव भयकृत् भयनाशनः -

**"श्रीनिवासाय सर्वान्तर्वासाय करुणात्मने**
**तन्मानसनिवासायै दयायै चास्तु मङ्गलम्"॥**




अदृश्यो व्यक्तरूपश्चसहस्रजिदनन्तजित्॥


Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and
Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.



## १६-१०-२०२० तः
## २४-१०-२०२० पर्यन्तं प्रवृत्तस्य
## श्रीवेङ्कटेश्वरस्वामिनवरात्रिब्रह्मोत्सवस्य
## दृश्यमालिका

















